॥ भगवच्छरणस्तोत्रम् ॥

श्रीगणेशाय नमः॥

सच्चिदानन्दरूपाय भक्तानुग्रहकारिणे ।
मायानिर्मितविश्वाय महेशाय नमो नमः ॥ १॥

रोगा हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् ।
मृत्युश्च नृत्यति सदा कलयन् दिनानि तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ २॥

देहो विनश्यति सदा परिणामशीलश्चित्तं च खिद्यति सदा विषयानुरागि ।
बुद्धिः सदा हि रमते विषयेषु नान्तस्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ३॥

आयुर्विनश्यति यथामघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः ।
वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ ४॥

आयाव्ययो मम भवत्यधिको विनीते कामादयो हि बलिनो निबलाः शमाद्याः ।
मृत्युर्यदा तुदति मां बत किं वदेयं तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ५॥

तप्तं तपो न हि कदापि मयेह तन्वा वाण्या तथा न हि कदापि तपश्च तप्तम् ।
मिथ्याभिभाषणपरेण न मानसं हि तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ६॥

स्तब्धं मनो मम सदा न हि याति सौम्यं चक्षुश्च मे न तव पश्यति विश्वरूपम् ।
वाचा तथैव न वदेन्मम सौम्यवाणीं तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ७॥

सत्त्वं न मे मनसि याति रजस्तमोभ्यां विद्धे तदा कथमहो शुभकर्मवार्ता ।
साक्षात्परंपरतया सुखसाधनं तत्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ८॥

पूजा कृता न हि कदाऽपि मया त्वदीया मन्त्रं त्वदीयमपि मे न जपेद्रसज्ञा ।
चित्तं न मे स्मरति ते चरणौ ह्यवाप्य तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ९॥

यज्ञो न मेऽस्ति हुतिदानदयादि युक्तो ज्ञानस्य साधनगणो न विवेकमुख्यः ।
ज्ञानं क्व साधनगणेन विना क्व मोक्षस्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १०॥

सत्संगतिर्हि विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत पंडितमानिनो मे ।
तामन्तरेण न हि सा क्व च बोधवार्ता तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ ११॥

दृष्टिर्न भूतविषया समताभिधाना वैषम्यमेव तदियं विषयीकरोति ।

शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १२॥

मैत्री समेषु न च मेऽस्ति कदापि नाथ दीने तथा न करुणा मुदिता च पुण्ये ।
पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १३॥

नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तामविहाय तस्य ।
क्वान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १४॥

त्यक्तं गृहाद्यपि मया भवतापशान्त्यै नासीदसौ हृतहृदो मम मायया ते ।
सा चाधुना किमु विधास्यति नेति जाने तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १५॥

प्राप्ता धनं गृहकुटुम्बगजाश्वदारा राज्यं यदैहिकमथेन्द्रपुरश्च नाथ ।
सर्वं विनश्वरमिदं न फलाय कस्मै तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १६॥

प्राणान्निरुध्य विधिना न कृतो हि योगो योगं विनाऽस्ति मनसः स्थिरता कुतो मे ।
तां वै विना मम न चेतसि शान्तिवार्ता तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १७॥

ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाऽकरवं हि तेषाम् ।
सेवाऽपि साधनतया विदितास्ति चित्ते तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १८॥

तीर्थादिसेवनमहाविधिना हि नाथ नाकारि येन मनसो मम शोधनं स्यात् ।
शुद्धिं विना न मनसोऽवगमापवर्गौ तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ १९॥

वेदान्तशीलनमपि प्रमितिं करोति ब्रह्मात्मनः प्रमितिसाधनसंयुतस्य ।
नैवाऽस्ति साधनलवो मयि नाथ तस्यास्तस्मात्त्वमद्यशरणं मम दीनबन्धो ॥ २०॥

गोविन्द शंकर हरे गिरिजेश मेश शम्भो जनार्दन गिरीश मुकुन्द साम्ब ।
नान्या गतिर्मम कथंचन वां विहाय तस्मात्प्रभो मम गतिः कृपया विधेया ॥ २१॥

एतत्स्तवं भगवदाश्रयणाभिधानं ये मानवाः प्रतिदिनं प्रणताः पठन्ति ।
ते मानवा भवरतिं परिभूय शान्तिं गच्छन्ति किं च परमात्मनि भक्तिमद्धा ॥ २२॥

इति श्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानन्दविरचितं भगवच्छरणस्तोत्रं सम्पूर्णम्॥